कर। अमच्च! तदो सो लोअलोअणाणन्दभूदो अणिच्छन्तस्स य्येव णाअरजणस्स (प) णिवारिदो चाणक्कहदएण कौमुदीमहूसवो। एत्थन्तरे थणकलसेण पउत्ता चन्दउत्तस्स समुत्तेजणसमत्था सिलोअपरिवाटी। (१८)

राच। कीदृशी सा?

कर। ["सत्त्वोत्कर्षस्य" इत्यादि पूर्वोक्तं पठति]।

राच। [सहर्षम्] साधु सखे स्तनकलस! साधु। काले भेदबीजमुप्तम्, (व) अवश्यमेव फलम् उपदर्शयिष्यति। यतः,—

सद्यः क्रीडारसच्छेदं प्राकृतोऽपि न मर्षयेत्।
किमु लोकाधिकं धाम बिभ्राणः पृथिवीपतिः॥ १०

मल। एवमेतत्?

राच। ततस्ततः?

कर। तदो, चन्दउत्तेण आणाभङ्गकलुसिदहिअएण, सुइरं अमच्चगुणं पसंसिअ, अब्भंसिदो अहिआरादो चाणक्कहदओ (२०) (भ)

मल। सखे भागुरायण! गुणप्रशंसया दर्शितः चन्द्रगुप्तेन राक्षसे भक्तिपक्षपातः। (म)

---

(१८) अमात्य! ततः स लोकलोचनानन्दभूतोऽनिच्छत एव नागरजनस्य निवारितश्चाणक्यहतकेन कौमुदीमहोत्सवः। अत्रान्तरे स्तनकलशेन प्रवर्तिता चन्द्रगुप्तस्य समुत्तेजनसमर्था श्लोकपरिपाटी।

(२०) ततश्चन्द्रगुप्तेन आज्ञाभङ्गकलुषितहृदयेन, सुचिरम् अमात्यगुणं प्रशस्य, भ्रंशितोऽधिकाराच्चाणक्यहतकः।

---

(प) लोकलोचनानाम् आनन्दभूतः प्रीतिहेतुः। अनिच्छतः नगरजनस्य अनिच्छाम् अवगणय्य अनादृत्य।

(व) काले उपयुक्तसमये। उप्तं रोपितम्।

सद्य इत्यादि। प्राकृतोऽपि नीचोऽपि जनः क्रीडायां आनन्दजनके ईहने रसच्छेदं रसभङ्गं सद्यः तत्क्षणात् न मर्षयेत् सहेत। लोकाधिकं सर्वलोकातिगं धाम तेजः बिभ्राणः धारयन् पृथिवीपतिर्भूपालः किमु मर्षयेदिति शेषः न कथमपि मर्षयेदित्यर्थः॥ १०

(भ) आज्ञाया आदेशस्य भङ्गेन लङ्घनेन कलुषितं हृदयं यस्य तेन। भ्रंशितः प्रच्यावितः। अधिकारात् साचिव्यात्।

(म) गुणप्रशंसया उत्कर्षस्तुत्या। भक्तिपूर्वः पक्षपातः भक्तिपक्षपातः।

भागु। कुमार ! न तथा गुणप्रशंसया, यथा चाणक्यवटोः निराकरणेन । (य)

राक्ष। भद्र ! किम् अयमेव एकः कौमुदीमहोत्सवप्रतिषेधः चन्द्रगुप्तस्य चाणक्यं प्रति कोपकारणम्, उत अन्यदपि अस्ति ?

मल। सखे भागुरायण ! चन्द्रगुप्तस्य अपरकोपकारणान्वेषणे किं फलमेष पश्यति ? (र)

भागु। कुमार ! एतत् फलं पश्यति, —मतिमतिमान् चाणक्यः निष्प्रयोजनमेव (ल) किमर्थं चन्द्रगुप्तं कोपयिष्यति। न च कृतवेदी (व) चन्द्रगुप्त एतावता गौरवम् उल्लङ्घयिष्यति। सर्वथा चाणक्यचन्द्रगुप्तयोः पुष्कलात् कारणाद् यो विश्लेष उत्पद्येत स आत्यन्तिको भविष्यति इति। (श)

कर। अमच्च ! अत्थि अस्स वि चन्दउत्तस्स कोवकारणं चाणक्के (२१)

राक्ष। किं किम् ?

कर। जधा पढमं दाव उवेक्खिदो अणेण अवक्कमन्तो (ष) कुमारो मलयकेदू अमच्चरक्खसो अ। (२२)

राक्ष। [सहर्षम्] सखे शकटदास ! हन्त ! हस्ततलगतः (स) मे सम्प्रति चन्द्रगुप्तो भविष्यति।

---

(२१) अमात्य ! अस्ति अन्यदपि कोपकारणं चाणक्ये।

(२२) यथा प्रथमं तावदुपेक्षितः अनेन अपक्रामन् कुमारो मलयकेतुः अमात्य राक्षसश्च।

शक। इदानीं चन्दनदासस्य बन्धनान्मोचः, भवतां च पुत्रदारैः सह समागमः, जीवसिद्धिप्रभृतीनां क्लेशच्छेदः। (ङ)

भागु। [आत्मगतम्] जातः सत्यं जीवसिद्धेः क्लेशच्छेदः।

मल। सखे भागुरायण! "हस्ततलगतो मे सम्प्रति चन्द्रगुप्तो भविष्यति" इति व्याहरत, कोऽयमस्य अभिप्रायः? (क)

भागु। किम् अन्यत्? चाणक्याद् अपकृष्टस्य चन्द्रगुप्तस्य उद्धरणाद् (ख) किञ्चित्कार्य्यम् अवश्यं पश्यति।

राक्ष। भद्र! हृताधिकारः साम्प्रतं क्व (ग) असौ बटुः?

कर। तहिं ज्जेव पाडलिपुत्ते पडिवसदि। (२३)

राक्ष। [सावेगम्] भद्र! तत्रैव प्रतिवसति, न तपोवनं गतः प्रतिज्ञां वा न पुनः समारूढवान्? (घ)

कर। अमच्च! तपोवणं गमिस्सदि त्ति सुणीअदि। (२४)

राक्ष। [सावेगम्] (ङ) शकटदास! न इदमुपपद्यते पश्य,—

देवस्य येन पृथिवीतलवासवस्य
साऽग्रासनापनयजा निकृतिर्न सोढा।
सोऽयं स्वयङ्कृतनराधिपतेर्मनस्वी,
मौर्य्यात्कथं नु परिभूतिमिमां सहेत? ॥ ११

---

(२३) तत्रैव पाटलिपुत्रे प्रतिवसति।

(२४) अमात्य! तपोवनं गमिष्यतीति श्रूयते।

---

(ङ) बन्धनात् कारागृहात्, मोचः मुक्तिः। समागमः सम्मेलनम्। क्लेशच्छेदः दुःखनाशः।

(क) व्याहरत भाषमाणस्य। अभिप्रायः आशयः।

(ख) अपकृष्टस्य विप्रकृष्टस्य वियुक्तस्येत्यर्थः। उद्धरणात् उन्मूलनात्।

(ग) हृताधिकारः विलुप्ताधिकारः। क्व कुत्र वर्त्तते इति शेषः।

(घ) तपश्चरणार्थं वनं तपोवनं न गतः न यातः अतिनिर्वेदात्। प्रतिज्ञां समारूढवान्, अवलम्बितवान्, अनितुम्पितवान्?

(ङ) चाणक्ये तपोवनं गते असम्भावितदर्शनतया पुनः समागमाशा चिरलुप्ता स्यात्, चन्द्रगुप्तनिधनप्रतिज्ञया च मयैवेदं सिद्धं तत्रावस्थाने तु कालेन वीतक्रोधतया पुनः सम्मेलनं सम्भवति, तेन च मे कार्य्यहानिरिति राक्षसस्याशयः। उपपद्यते सङ्गच्छते।

देवस्येत्यादि। येन चाणक्येन पृथिवीतलवासवस्य धरणीतलस्य मघोनः, राजचक्रवर्त्तिन

मल। सखे भागुरायण! चाणक्यस्य तपोवनगमने पुनः प्रतिज्ञारोहणे वा का अस्य स्वार्थसिद्धिः?

भागु। कुमार! न अयम् अत्यन्तदुर्बोधोऽर्थः यावत् यावत् निरपेक्ष चाणक्यहतकः चन्द्रगुप्ताद् दूरीभवति (च) तावत् तावत् अस्य स्वार्थसिद्धिः।

शक। अमात्य! अलम् अत्यन्तविकल्पितेन। एतत् उपपद्यत एव (छ) कुतः? पश्यतु अमात्यः,—

राज्ञां चूडामणीन्दुद्युतिखचितशिखे मूर्ध्नि विन्यस्तपादः
स्वैरेवोत्पाद्यमानं किमिति विषहते मौर्य्य आज्ञाविघातम्?।
कौटिल्यः कोपनोऽपि स्वयमभिचरणे ज्ञातदुःखः प्रतिज्ञां,
दैवात् पूर्णप्रतिज्ञः पुनरपि न करोत्यायतिज्ञानिभीतः ॥ १२

राक्ष। सखे शकटदास! एवमेतत्, तद्गच्छ, विश्रामय करभकम्। (ज)

[illegible] तस्मात् [illegible] पूर्व्वानुभूता [illegible] न [illegible] राजपदे प्रतिष्ठितात् [illegible] चन्द्रगुप्तात् [illegible] । [illegible] ॥ ११

(च) अत्यन्तदुर्बोध [illegible] । निरपेक्ष उदासीनः । दूरीभवति दूरं [illegible] तिष्ठति ।

(छ) [illegible] । उपपद्यते युज्यते ।

राज्ञामित्यादि । [illegible] ॥ १२

(ज) [illegible] ।

शक। यत् आज्ञापयति अमात्य इति। [ करभकेण सह निष्क्रान्त ]।

राच। अहमपि कुमार द्रष्टुम् इच्छामि।

मल। अहमेव आर्य्यं द्रष्टुम् आगत।

राच। [ नाट्येन अवलोक्य ] अये। कुमार एव आगत। [ आसनात् उत्थाय ]। इदम् आसनम्, उपवेष्टुम् अर्हति कुमार।

मल। अहम् उपविशामि। उपविशतु आर्य्य। [ इति उभौ यथासनम् उपविष्टौ ] आर्य्य। अपि सह्या शिरोवेदना ? (झ)

राच। कुमारस्य अधिराजशब्देन अतिरस्कृते कुमारशब्दे, कुत शिरोवेदनाया सह्यता ? (ञ)

मल। स्वयम् उरीकृतमेतत् आर्य्येण, न दुष्प्राप भविष्यति। तत् कियन्त कालम् अस्माभि एवं सम्भृतबले अपि शत्रुव्यसनम् अपेक्षमाणै उदासितव्यम्। (ट)

राच। कुमार। कुतोऽद्यापि कालहरणस्य अवकाश ? प्रतिष्ठस्व रिपुजयाय।

मल। अमात्य। अपि किञ्चित् शत्रोर्व्यसनम उपलब्धम् ? (ठ)

राच। बाढम्, उपलब्धम्।

मल। कीदृशम् ?

राच। सचिवव्यसन, किम अन्यत्। अपकृष्ट (ड) चाणक्यात् चन्द्रगुप्त।

मल। अमात्य। सचिवव्यसनम् अव्यसनमेव।

राच। कुमार। अन्येषा भूपतीना कदाचित् अमात्यव्यसनम् अव्यसनमपि स्यात्, न पुन चन्द्रगुप्तस्य।

मल। आर्य्य। ननु विशेषत चन्द्रगुप्तस्य इति।

(झ) सह्या सोढु शक्या। शिरोवेदना शिर पीडा।

(ञ) अधिराज इति शब्देन। अतिरस्कृते अपरिभूते।

(ट) उरीकृत अङ्गीकृतं। दुष्प्राप दुर्लभं। सम्भृतबले कल्पितसैन्ये शत्रोर्व्यसन विरह अवसराय प्रतीक्षमाणै। उदासितव्य निश्चिन्तै स्थातव्य, सत्वरमसुकरत्वात्।

(ठ) उपलब्धं विदितं अवगतम्।

(ड) सचिवव्यसनं अमात्यविच्छेदरूपा विपत्। अपकृष्ट दूरवर्ती।

राच। किं कारणं यत् अस्य अमात्यव्यसनम् अव्यसनम् ?

मल। चन्द्रगुप्तप्रभृतीनां हि चाणक्यदोषा एव अपरागहेतवः। तस्मिन् निराकृते प्रथममपि चन्द्रगुप्तानुरक्ताः प्रकृतयः। इदानीं पुनः सुतरामेव तत्र अनुरागं दर्शयिष्यन्ति। (ढ)

राच। कुमार! न एतदेवं, इह द्विप्रकाराः प्रकृतयः,—चन्द्रगुप्तसहोत्थायिन्यो नन्दकुलानुरक्ताश्च (ण)। तत्र चन्द्रगुप्तसहोत्थायिनीनां प्रकृतीनां चाणक्यदोषा एव विरागहेतवः, न नन्दकुलानुरक्तानाम्। ताः खलु नन्दकुलम् अनेन पितृकुलभूतं कृतघ्नेन घातितमिति अपरागामर्षाभ्यां विप्रकृताः सत्यः स्वाश्रयम् अलभमानाः चन्द्रगुप्तम् एव अनुवर्त्तन्ते। त्वादृशं पुनः प्रतिपक्षोद्धरणे सम्भावितशक्तिम् अभियोक्तारम् आसाद्य, क्षिप्रमेनं परित्यज्य, त्वामेव आश्रयिष्यन्ते इति। अत्र कुमारस्य वयमेव निदर्शनम्। (त)

मल। अमात्य! किमेतत् एवैकं सचिवव्यसनम् अभियोगकारणं चन्द्रगुप्तस्य? आहोस्वित् अन्यदपि अस्ति? (थ)

राच। कुमार! किम् अन्यैः बहुभिरपि? एतद्धि तत्र प्रधानतमम्। (द)

(ढ) चन्द्रगुप्तप्रकृतीनां मौर्यप्रजापुञ्जानां चाणक्यस्य दोषाः विनयरहितत्वादयः अवगुणा एव अपरागस्य विरक्तेः हेतवः कारणानि। तस्मिन् चाणक्ये निराकृते प्रत्याख्याते प्रथमं प्राक्। सुतरां अत्यर्थं। अनुरागं प्रीतिं भक्तिं वा।

(ण) चन्द्रगुप्तेन सह उत्तिष्ठन्ते इति चन्द्रगुप्तसहोत्थायिन्यः चन्द्रगुप्तसमदुःखसुखाः। नन्दकुलानुरक्ताः नन्दवंशानुरागिण्यः।

(त) ताः प्रकृतयः। पितृकुलभूतं पितृवंशसदृशं, प्रजापालनादिति भावः। कृतघ्नेन [illegible]। घातितं निपातितं। अपरागामर्षाभ्यां विरागक्रोधाभ्यां। विप्रकृताः विरक्ताः। स्वाश्रयं स्वकीयावलम्बनं अलभमानाः अप्राप्नुवत्यः अनुवर्त्तन्ते आनुगत्येन सेवन्ते। त्वादृशं भवद्विधं। प्रतिपक्षोद्धरणे शत्रूच्छेदने सम्भावितशक्तिं अनुमितबलं। अभियोक्तारं विरोद्धारं। निदर्शनं दृष्टान्तः।

(थ) एतत् सचिवव्यसनं एवं एकविधं अभियोगकारणं आक्रमणहेतुः। आहो विकल्पार्थकमव्ययं। किम् प्रश्नबोधकमव्ययं। अन्यत् अन्यविधं कारणम्।

(द) तत्र तद्विषये प्रधानतमं उत्कृष्टतमम्।

मल। अमात्य ! कथं प्रधानतमं नाम ? किमिदानीं चन्द्रगुप्तः स्वराज्यकार्य्यधुराम् अन्यत्र मन्त्रिणि आत्मनि वा समासज्य, स्वयं प्रतिविधातुम् असमर्थः स्यात्। (ष)

राच। बाढम्, असमर्थ एव।

मल। किं कारणम् ?

राच। स्वायत्तसिद्धिषु, उभयायत्तसिद्धिषु (स) वा भूमिपालेषु कदाचित् एतत् सम्भवेत, न तु चन्द्रगुप्ते। चन्द्रगुप्तस्तु दुरात्मा, नित्यं सचिवायत्तसिद्धौ एव अवस्थितः चक्षुर्विकल इव अप्रत्यक्षसर्वलोकव्यवहारः (ह) कथमिव स्वयं प्रतिविधातुं समर्थः स्यात् ? कुतः ?—

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः।
सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति ॥ १३

अपिच,—

नृपोऽपकृष्टः सचिवात् तदर्पणः
स्तनन्धयोऽत्यन्तशिशुः स्तनादिव।
अदृष्टलोकव्यवहारमूढधी-
र्मुहूर्त्तमप्युत्सहते न वर्त्तितुम् ॥ १४

(ष) स्वराज्यस्य कार्य्यधुरां कार्य्यसम्पादनभारं। समासज्य संन्यस्य। स्वयं आत्मना। प्रतिविधातुं प्रतिकर्तुं। असमर्थः अक्षमः।

(स) स्वायत्ता स्वाधीना सिद्धयो येषां तेषु तथोक्तेषु। उभयोः आत्मनः सचिवस्य च आयत्ता सिद्धयो येषां तेषु तथोक्तेषु।

(ह) दुरात्मा दुष्टः। नित्यं सततं। सचिवायत्तसिद्धौ अमात्याधीनसाफल्ये एव स्थितः वर्त्तमानः। चक्षुर्भ्यां विकलः हीनः चक्षुर्विकलः नेत्रविहीनः। अप्रत्यक्षः अदृष्टः सर्वेषां लोकानां व्यवहारो येन सः तथोक्तः।

अत्युच्छ्रिते इत्यादि। मन्त्रिणि सचिवे पार्थिवे नृपाणि च अत्युच्छ्रिते अत्युन्नते समधिकमुत्कर्षति सति श्रीः राजलक्ष्मीः पादौ चरणौ विष्टभ्य स्थिरीकृत्य उपतिष्ठते स्थिरा भवति। सा श्रीः लक्ष्मीः स्त्रीस्वभावात् स्त्रीस्वभावसुलभदौर्बल्यात् भरस्य असहा भरं वोढुमसमर्था इत्यर्थः। ततो द्वयोः तयोः राजमन्त्रिणोः एकतरं अन्यतरं जहाति त्यजति उपजातिवृत्तम् ॥ १३

नृपोऽपकृष्ट इत्यादि। अपकृष्टः अपसारितः अत्यन्तशिशुः नितान्तबालः स्तनात् इव। तत् सचिवं अर्पयति कार्य्यभारं इति तदर्पणः तत्र न्यस्तकार्य्यभारः, न

उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलं
श्यामाः श्यामोपकण्ठद्रुममलिमुखराः कल्लोलमुखरम्।
स्रोतःखातावसीदत्तटमुरुदशनैरुत्सादिततटाः
शोणं सिन्दूरशोणा मम गजपतयः पास्यन्ति शतशः ॥ १६

अपिच,—

गम्भीरगर्जितरवाः स्वमदाम्बुमिश्रम्
आसारवर्षमिव शीकरमुद्गिरन्त्यः।
विन्ध्यं विकीर्णसलिला इव मेघमाला
रोत्स्यन्ति वारणघटा नगरं मदीयाः ॥ १७

[ इति भागुरायणेन सह निष्क्रान्तो मलयकेतुः ]।

राक्ष०। कः कोऽत्र भोः ?

पुरुषः। [ प्रविश्य ] आणवेदु अमच्चो। (२५)

---

(२५) आज्ञापयतु अमात्यः।

---

उत्तुङ्गा इत्यादि। उत्तुङ्गाः अत्यर्थमुन्नताः, स्रुतानि क्षरितानि मदसलिलानि दानवारीणि येषां ते स्रुतमदसलिलाः, श्यामाः कृष्णवर्णाः, अलिभिः मधुलोभिभ्रमरैः मुखराः शब्दायमानाः, उरुभिः बृहद्भिः महद्भिरित्यर्थः, दशनैर्दन्तैः उत्सादितानि विनाशितानि तटानि तीराणि यैस्ते उत्सादिततटाः सिन्दूरेण लोहितवर्णबिन्दुविशेषेणेत्यर्थः शोणाः रक्ताः शतशः असंख्याः गजपतयः गजेन्द्राः। तुङ्गकूलं समुन्नततटं, प्रस्यन्दीनि क्षरन्ति सलिलानि यत्र स प्रस्यन्दिसलिलः तं प्रवहमाणतोयं। श्यामाः उपकण्ठद्रुमाः यस्य तं श्यामोपकण्ठद्रुमं नीलद्रुमाश्रिताभ्यर्णभूभागं। कल्लोलमुखरं तरङ्गवाचालं। स्रोतसा जलप्रवाहेण खातं विदारितं अत एव अवसीदत् अवसादं प्राप्नुवत् पतदित्यर्थः। तटं यस्य तं स्रोतःखातावसीदत्तटं निरन्तरप्रवाहविध्वस्ततीरं। शोणं पाटलिपुत्रान्तर्गतनदविशेषं पास्यन्ति। अत्र उपमालङ्कारः। सुवदना वृत्तं। "ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना" इति लक्षणात्॥ १६

गम्भीरगर्जितरवा इत्यादि। गम्भीरं प्रगाढं यत् गर्जितं मेघगर्जनमित्यर्थः। तद्वत् रवः शब्दो यासां ताः गम्भीरगर्जितरवाः। स्वमदाः स्वकीयदानानि अम्बूनि जलानि तैर्मिश्रं स्वमदाम्बुमिश्रं दानजलयुक्तं शीकरं जलकणं "शीकरोऽम्बुकणाः स्मृताः।" इत्यमरः। आसारवर्षं धारासम्पातमिव "धारासम्पात आसारः" इत्यमरः। उद्गिरन्त्यः उद्वमन्त्यः इव मदीयाः वारणघटाः हस्तिघटाः, विकीर्णसलिलाः विक्षिप्तजला मेघमाला घनपङ्क्तयः विन्ध्यं विन्ध्याचलं इव नगरं कुसुमपुरं रोत्स्यन्ति आवरणं करिष्यन्ति। उपमालङ्कारः। वसन्ततिलकं वृत्तम्॥ १७

राच। प्रियंवदक! ज्ञायतां सांवत्सरिकाणां (भ) द्वारि कस्तिष्ठति।

प्रिय। जं अमच्चो आणवेदि। [इति निष्क्रम्य क्षपणकं दृष्ट्वा पुनः प्रविश्य च] अमच्च! एसो क्खु संवच्छरिओ खवणओ (२६)

राच। [आत्मगतम् अनिमित्तं सूचयित्वा]। कथं प्रथममेव क्षपणकदर्शनम्?

प्रिय। जीवसिद्धी। (२७)

राच। [प्रकाशम्।] अबीभत्सदर्शनं (म) कारयित्वा प्रवेशय।

प्रिय। जं अमच्चो आणवेदि। (२८)

[इति निष्क्रान्तः।]

[ततः प्रविशति क्षपणकः।]

क्षप।—

सासणमलिहन्ताणं प्पडिवज्जह, मोहवाहिवेज्जाणं।
जे पढममेत्तकडुअं, पच्छा पत्थं उवदिसन्ति॥ (२८) (२९)

[उपसृत्य।] धम्मसिद्धी होदु सावगाणं।

राच। भदन्त! निरूप्यतां, तावत् अस्माकं प्रस्थानयोग्य दिवस। (य)

---

(२६) यत् अमात्य आज्ञापयतीति। अमात्य! एष खलु सांवत्सरिकः क्षपणकः।

(२७) जीवसिद्धिः।

(२८) यत् अमात्य आज्ञापयति।

(२९) शासनमर्हतां प्रतिपद्यध्वं मोहव्याधिवैद्यानाम्।
ये प्रथममात्रकटुकं पश्चात् पथ्यमुपदिशन्ति॥ (१८)
धर्मसिद्धिर्भवतु श्रावकाणाम्।

क्षप। [नाट्येन विलोक्य।] सावका! णिरूविदे मुहुत्ते। आ मज्झणादो णिव्वुत्तसव्वकल्लाणा सोहणा तिही संपुण्णचन्दा पुण्णमासी, तुम्हाणं उत्तराए दिसाए दक्खिणं दिसं पत्थिदाणं (१) अदक्खिणे णक्खत्ते। अवि अ,—

अत्थाहिमुहे सूले, उदिदे संपुण्णमण्डले चन्दे।
गमणं बुहस्स लग्गे, उदिदत्थमिदे अ केदुम्मि॥ (२०) (१९)

राक्ष। भदन्त! तिथिरेव तावत् न शुध्यति।

क्षप। सावका!—

एक्कगुणा होइ तिही, चउग्गुणे होइ णक्खत्ते।
चउसट्ठिगुणे लग्गे, एसे दीसदि जोइससिद्धंत (२१)॥ २०
लग्गे होइ सुलग्गे, कूलग्गह पलिहलिअ जासु।
पाविहि दीहं लाह चन्दस्स बलेण गच्छन्ते (२२)॥ २१

---

(२०) उपासक! निरूपितो मुहूर्तः। आ मध्याह्नात् निर्वृत्तसर्वकल्याणा शोभना तिथिः सम्पूर्णचन्द्रा पौर्णमासी युष्माकमुत्तरस्या दिशो दक्षिणां दिशं प्रस्थितानाम् अदक्षिणं नक्षत्रम्।

अपि च,—अस्ताभिमुखे सूर्ये, उदिते सम्पूर्णमण्डले चन्द्रे।
गमनं बुधस्य लग्ने, उदितास्तमिते च केतौ॥

(२१) उपासक!—
एकगुणा भवति तिथिश्चतुर्गुणं भवति नक्षत्रम्।
चतुःषष्टिगुणं लग्नम्, एतद्दृश्यते ज्योतिषसिद्धान्ते॥

(२२) लग्नं भवति सुलग्नं, क्रूरग्रहं परिहर यासु।
प्राप्नुहि दीर्घं लाभं चन्द्रस्य बलेन गच्छन्॥

---

(१) निरूपित अवधारितः। मुहूर्तं शुभक्षणः। आ मध्याह्नात् मध्याह्नकालम् आरभ्य निर्वृत्तं निर्विघ्नं यथा सकलं कल्याणं मङ्गलं यस्यां सा निर्वृत्तसर्वकल्याणा निर्विघ्नसकलमङ्गला अतएव शोभना रमणीया, पौर्णमासी पञ्चदशत्वात् तत्र यात्रायां वैकल्येन अदक्षिणत्वं नक्षत्रस्य। अदक्षिणं प्रतिकूलम्।

सूरे सूर्ये अस्ताभिमुखे अस्तगमनोन्मुखे सम्पूर्णमण्डले षोडशकलेऽपि चन्द्रे उदिते सति केतौ केतुग्रहे राहुग्रहे च, उभयोरेकशरीरत्वात् एकनामाभिधानमिति ढुण्ढिराज। उदितास्तमिते एकस्मिन् उदिते अन्यस्मिन् अस्तमिते उभयोरेकदा उदयस्यासम्भवात्। बुधस्य सौम्यस्य लग्ने मिथुनकन्ये गमनं कर्तव्यमिति शेषः। यद्यपि विरुभावात्

# पञ्चमोऽङ्कः।

[ ततः प्रविशति लेखमलङ्कारस्थगिकाञ्च समुद्राम् (क)

आदाय सिद्धार्थकः ]।

सिद्धा। हीमाणहे (ख) हीमाणहे ॥—

बुद्धिजलणिज्झरेहिं सिच्चन्ती देसकालकलसेहिं।

दंसइस्सदि कज्जफलं गुरुअं चाणक्कणीदिलदा (१) ॥ १

गहीदो मए अज्जचाणक्केण पढमलिहिदो लेहो, अमच्चरक्खसस्स मुद्दालञ्छिदो। तस्स ज्जेव मुद्दालञ्छिदा इअं आहरणपेडिआ। चलिदोम्हि किल (ग) पाडलिउत्तं, ता जाव गच्छम्हि। [ परिक्रम्य अवलोक्य च। ] कहं खवणओ आअच्छदि ? जाव मे असउणभूदं इमस्स दंसणं, ता आदिच्चदंसणेण पडिहणामि। (२) (घ)

---

(१) आश्चर्यम् आश्चर्यम्।—

बुद्धिजलनिर्झरैः सिच्यमाना देशकालकलशैः।

दर्शयिष्यति कार्यफलं गुरुकं चाणक्यनीतिलता ॥

(२) गृहीतो मया आर्यचाणक्येन प्रथमलिखितो लेखः अमात्यराक्षसस्य मुद्रालाञ्छितः। तस्यैव मुद्रालाञ्छिता इयम् आभरणपेटिका। चलितोऽस्मि किल पाटलिपुत्रं, तद् यावत् गच्छामि। कथं क्षपणक आगच्छति ? यावन्मे अशकुनभूतमस्य दर्शनं तदादित्यदर्शनेन प्रतिहन्मि।

---

(क) स्थगिका पेटिका। अलङ्कारस्थगिका आभरणाधारविशेषः। समुद्रां राक्षसनामाङ्कितमुद्रया चिह्निताम्। आदाय गृहीत्वा।

(ख) आश्चर्यद्योतनाय प्रयुक्तमेतत्पदद्वयं निपातनसिद्धम्।

बुद्धिजलनिर्झरैरित्यादि। बुद्धिः प्रज्ञा एव जलं बुद्धिजलं तस्य निर्झराः निःसरणानि तैः बुद्धिजलनिर्झरैः, देशाः स्थानानि कालाः समयाः अनुकूला इत्यर्थः त एव कलशाः तैः देशकालकलशैः सिच्यमाना सलिलैः आर्द्रीक्रियमाणा इति यावत् चाणक्यस्य नीतिरेव लता प्रतती अथ गुरुकं महत् प्रचुरमित्यर्थः फलं इष्टसिद्धिरूपं लाभं दर्शयिष्यति। अत्र परम्परितरूपकालङ्कारः ॥ १

(ग) मुद्रालाञ्छिता अङ्गुलिमुद्रयाचिह्निता। आभरणानां पेटिका मञ्जूषा आभरणपेटिका। किलेति अलीके अलनमलीकमित्यर्थः।

(घ) अशकुनभूतम् अमङ्गलभूतं दुर्निमित्तसूचकं तस्य क्षपणकस्य दर्शनं साक्षात्

[ ततः प्रविशति क्षपणकः ]।

क्षप। अलिहन्ताणं पणमामो, जे दे गंभीलदाए बुद्धीए।
लोउत्तलेहिं लोए सिद्धिं मग्गेहिं मग्गन्ति (३) ॥ २

सिद्धा। भदन्त ! पणमामि। (४)

क्षप। सावका ! धम्मलाहो दे होदु। [ निरूप्य निर्वर्ण्य ]। सावका ! समुद्दसन्तलणकिदव्ववसाअं (ङ) विअ दे हिअअं पेक्खामि। (५)

सिद्धा। कहं भदन्तो जाणादि ? (६)

क्षप। सावका ! किं एत्थ जाणिदव्वं ? णं एसो ज्जेव दे मग्गणावाकण्णधारो लेहो सूचेदि। (७) (च)

---

(३) अर्हतां प्रणमामो ये ते गम्भीरतया बुद्धेः।
लोकोत्तरैर्लोके सिद्धिं मार्गैर्मार्गयन्ति ॥

(४) भदन्त ! प्रणमामि।

(५) उपासक ! धर्मलाभस्ते भवतु। उपासक ! समुद्रसन्तरणकृतव्यवसायमिव ते हृदयं पश्यामि।

(६) कथं भदन्तो जानाति ?

(७) उपासक ! किमत्र ज्ञातव्यम् ? ननु एष एव ते मार्गनौकर्णधारो लेखः सूचयति।

---

करण। आदित्यदर्शनेन सूर्यावलोकनेन प्रतिहन्मि व्याहन्मि अमङ्गलमितीव, सर्वमङ्गल-मङ्गल्यस्य सूर्यस्य दर्शनं शुभावहमिति भावः। तथाच "लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः। हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः"। इति, "गुरुमपि सदा सूर्यं प्रातः पश्येत् सदा बुधः"। इति च श्रुतं।

अर्हताभित्यादि। अर्हताञ्जिनदेवानां प्रणामं नमस्कुर्मः, ये ते अर्हन्तः बुद्धेः प्रज्ञाया गम्भीरतया गाम्भीर्येण स्थिरतया बुद्धा इत्यर्थः। लोके जगति "लोकस्तु भुवने जने" इत्यमरः। लोकोत्तरैः अलौकिकैः मार्गैः उपायैः द्वारैरित्यर्थः सिद्धिं साफल्यं मार्गयन्ति अनुसन्धाय प्राप्नुवन्ति ॥ २ ॥

(ङ) समुद्रस्य सागरस्य सन्तरणे कृतः व्यवसायः उद्योगो येन सः तं समुद्रसन्तरण-कृतव्यवसायं नितान्तदुष्करकार्योद्यतम्।

(च) मार्गे एव नौः तरणिः तस्याः कर्णधारः नाविकम् मार्गनौकर्णधारः लेख पत्रिका। तस्य विपदुद्धारकत्वात् इति भावः।

सिद्ध। जाणिदं भदन्तेण देसन्तलं चलिदोह्मि। ता कधेदु भदन्तो कीदिसो अज्ज दिवसो ? (८) (छ)

क्षप। [विहस्य] सावका ! मुण्डं मुण्डिअ तुमं णक्खत्ताइं पुच्छसि ? (९) (ज)

सिद्ध। भदन्त ! सम्पदं पि किं जादं ? ता कधेहि, जइ अत्तणो अणुऊलं भविस्सदि, ता गमिस्सं, अण्णधा णिवत्तिस्सं। (१०) (झ)

क्षप। सावकाणं सम्पदं एदस्सिं मलयकेदुकडए अणुऊलेण अणणुऊलेण वा, अगहीदमुद्देण (ञ) ण गच्छीअदि। (११)

सिद्ध। भदन्त ! कहेहि कुदो क्खु अअं ? (१२)

क्षप। सावका ! णिसामेहि. पढमं दाव एत्थ मलअकेदुकडए लोअस्स अणिवारिअणिक्कमणप्पवेसो आसी। दाणीं इदो पच्चासण्णे कुसुमउरे, ण कोवि अमुद्दालञ्छिदो णिक्कमिदुं पविसिदुं वा

---

(८) ज्ञातं भदन्तेन देशान्तरं चलितोऽस्मि। तत् कथयतु भदन्तः कीदृशोऽद्य दिवसः ?

(९) उपासक ! मुण्डं मुण्डयित्वा त्वं नक्षत्राणि पृच्छसि ?

(१०) भदन्त ! साम्प्रतमपि किं जातम् ? तत् कथय, यदि आत्मनः अनुकूलं भविष्यति, तदा गमिष्यामि, अन्यथा निवर्त्स्ये।

(११) उपासकानां साम्प्रतमेतस्मिन् मलयकेतुकटके अनुकूलेन अननुकूलेन वा, अगृहीतमुद्रेण न गम्यते।

(१२) भदन्त ! कथय कुतः खलु अयम् ?

---

(छ) कीदृग् यात्रायोग्यं दिनं मया।

(ज) "क्षौरं विशाखाप्रतिपत्सुवर्ज्यं" इति श्रुतिः नक्षत्रविशेषे क्षौरनिषेधात् तत्पूर्वं सदालोचनमुचितं, मुण्डनात् परं तदालोचनं न सङ्गतं एवं यात्रायाः पूर्वं तद्दिवसीय वारतिथ्यादीनां विचारः कर्त्तव्यः, कृतायां यात्रायां तत्प्रश्नो निरर्थकः इत्यर्थः।

(झ) साम्प्रतं अधुना किं जातं भूते केवलं कृतयात्रोऽहं प्रस्थातुमुद्यतः न पुनः प्रस्थितः इत्यतः इत्यर्थः। आत्मनः स्वस्य अनुकूलं सहायं उपकारकमिति यावत्। अन्यथा नचेत्, अननुकूले सतीत्यर्थः। निवर्त्स्ये प्रत्यावर्त्स्ये निवृत्तो भविष्यामीत्यर्थः।

(ञ) मलयकेतुकटके मलयकेतुशिविरे। अनुकूलेन सहायेन स्वपक्षीयेण इत्यर्थः। अननुकूलेन असहायेन विपक्षेण इत्यर्थः। अगृहीतमुद्रेण अलब्धचिह्नेन अगृहीतपत्रादिकेन इत्यर्थः।

अप्पमादो आसि। ता जइ भाउराअणस्स मुद्दालंछिदोसि, तदो गच्छ वीसत्थो, अण्णधा णिव्वाहिअ णिउत्तअण्ण चिट्ठ। मा तुमं गुम्मट्ठाणाधिवेहिं संजमिदकरचलणो राअउलं पवेसीअसि (१३)(ट)

सिद्धा। किं ण आणादि भदन्तो, जधा अमच्चरक्खसस्स केलिअरो अन्तिओ (ठ) सिद्धत्थओ अहं त्ति ? ता असुद्दालंछिदंपि मं णिक्कमन्तं कस्स सत्ती णिवारेदुं ? (१४)

क्षप। सावआ। रक्खसस्स पिसाचस्स वा केलिअरो होहि। णत्थि उण दे असुद्दालंछिदस्स णिक्कमणोवाओ। (१५)

सिद्धा। भदन्त ! ण कुप्प, भण मे कज्जसिद्धी होदु त्ति (१६)(ड)

---

(१३) उपासक ! निशामय, प्रथमं तावदत्र मलयकेतुकटके लोकस्यानिवारितनिष्क्रमप्रवेश आसीत्। इदानीम् इतः प्रत्यासन्ने कुसुमपुरे, न कोऽपि अमुद्रालाञ्छितो निष्क्रमितुं प्रवेष्टुं वा अनुमीयते। तद् यदि भागुरायणस्य मुद्रालाञ्छितोऽसि, तदा गच्छ विश्वस्तः, अन्यथा निवृत्य निरुत्सुकः तिष्ठ। मा त्वं गुल्मस्थानाधिपैः संयमितकरचरणो राजकुलं प्रवेश्यसे।

(१४) किं न जानाति भदन्त, यथा अमात्यराक्षसस्य केलिकरः अन्तिकः सिद्धार्थकोऽहमिति ? तद् अमुद्रालाञ्छितमपि मां निष्क्रामन्तं कस्य शक्तिर्निवारयितुम् ?

(१५) उपासक। राक्षसस्य पिशाचस्य वा केलिकरो भव। नास्ति पुनस्ते अमुद्रालाञ्छितस्य निष्क्रमणोपायः।

(१६) भदन्त ! न कुप्य, भण मे कार्य्यसिद्धिर्भवतु इति।

---

(ट) न निवारितः निषिद्धः निष्क्रमः बहिर्गमनं प्रवेशश्च यस्य स अनिवारितनिष्क्रमप्रवेशः, अनिषिद्धगमनागमनः, लोक इति जनाकर्तृपदस्य विशेषणं। प्रत्यासन्ने समीपवर्त्तिनि। मुद्रया चिह्नविशेषेण लाञ्छितः चिह्नितः न भवतीति अमुद्रालाञ्छितः, अप्राप्तादर्शपत्र इत्यर्थः। अनुमीयते अनुमन्यते। निरुत्सुकत्वं निरुद्वेगेन। गुल्मस्थानं अपराधिनां निरोधस्थानं तस्य अधिपैः अध्यक्षैः। संयमितः सम्बद्धः करचरणं यस्य सः संयमितकरचरणः सम्बद्धहस्तपादः।

(ठ) केलिकरः क्रीडाकरः रहस्यालापी इत्यर्थः, अन्ते पार्श्वे चरतीति अन्तिकः पार्श्वचरः, नितान्तविश्वासभाजनमित्यर्थः। शक्तिः सामर्थ्यं। निवारयितुं निषेद्धुम्।

(ड) मम कथय। कार्य्यसिद्धिः कार्य्यसाफल्यं। भवतु अस्तु।

क्षप। सावका! गच्छ होदु दे कज्जसिद्धी। अहंपि भागुराअणादो पाडलिउत्तं गन्तुं मुद्दं पडिच्छेमि। (१७)

[इति उभौ निष्क्रान्तौ]।

[इति प्रवेशकः (ढ)]।

[ततः प्रविशति पुरुषेण अनुगम्यमानो भागुरायणः]।

भागु। [आत्मगतम्] अहो!! विचित्रता आर्य्यचाणक्यनीतेः।

कुतः?—

मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना
मुहुः सम्पूर्णाङ्गी, मुहुरतिकृशा कार्य्यवशतः।
मुहुर्भ्रश्यद्बीजा, मुहुरपि बहुप्रापितफले
त्यहो! चित्राकारा नियतिरिव नीतिर्नयविदः॥ ३

[प्रकाशम्।] भद्र भासुरक! न मां दूरीभवन्तमिच्छति कुमारः। अतोऽस्मिन् एव आस्थानमण्डपे विन्यस्यताम् आसनम्। (ण)

---

(१७) उपासक! गच्छ, भवतु ते कार्य्यसिद्धिः। अहमपि भागुरायणात् पाटलिपुत्रं गन्तुं मुद्रां प्रतीच्छामि।

---

(ढ) प्रवेशकः, नीचपात्राभ्यां कथांशानां सूचनात् अयं प्रवेशकः। यथा "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा।" इति साहित्यदर्पणम्।

मुहुर्लक्ष्योद्भेदा इत्यादि। मुहुः कदापि लक्ष्यः ज्ञेयः बीजस्य इत्यर्थः उद्भेदः प्रकाशो यस्याः सा लक्ष्योद्भेदा अनुमेयाङ्कुरा, मुहुः कदाचित् अधिगमस्य बोधस्य अभावेन गहना कठिना अधिगमाभावगहना अननुमेयस्वरूपा, मुहुः सम्पूर्णाङ्गी परिपुष्टावयवा, मुहुः कदाचित् कार्य्यवशतः कालव्यानुरोधेन अतिकृशा क्षीणशरीरा, मुहुः कदाचित् भ्रश्यद्बीजा विलुप्तबीजा, मुहुरपि कदाचिदपि बहु अनर्थं यथा तथा प्रापितं फलं यया सा बहुप्रापित फला अधिगमितबहुफला इत्यर्थः। इति एवम्प्रकारेण चित्राकारा विचित्ररूपा नियतिः दैवम् इव नयविदः नीतिनिपुणस्य नीतिः भवतीति शेषः। अत्र दुण्ढिराजः—मुहुर्लक्ष्योद्भेदा मुखसन्धौ बीजोद्भिन्ना सती बहुधा विस्तारिणीत्यर्थः। प्रतिमुखे लक्ष्यालक्ष्यतया प्रगल्भत्वे गहनातिकृशा च गर्भे मुहुर्मुहुः नष्टान्वेषणात् नष्टादिव बीजसमुद्योगी यस्याः सा तथोक्ता। विमर्शे बीजस्य स्पष्टमेव दर्शनात् सम्पूर्णाङ्गीत्युक्तं। निर्वहणे सर्व्वार्थोपसंहारात् बहुप्रापित फलेत्युक्तं। ईदृशी नयविदश्चाणक्यस्य नीतिर्नियतिरिव चित्राकारा। नियतेः चाणक्य नीतेश्च कार्य्याणां विचित्राकारता कारणं उपपद्यते। इति। अत्र अप्रस्तुतप्रशंसालङ्कार उपमया सङ्कल्यते। शिखरिणी वृत्तम्॥ ३

(ण) दूरीभवन्तं दूरे वर्त्तमानं। कुमारः मलयकेतुः। आस्थानमण्डपे सभामण्डपैकदेशे। विन्यस्यतां स्थाप्यताम्।

पुरुष। एद आसण, उपविसदु अज्जो। (१८)

भागु। [उपविश्य] भद्र भासुरक! यः कश्चित् मुद्रार्थी। (त) मां द्रष्टुम् इच्छति, स त्वया प्रवेशयितव्यः।

पुरु। ज अज्जो आणवेदि। (१९)

[इति निष्क्रान्तः]।

भागु। [स्वगतम्] कष्टम् एवमपि नाम अयम् अस्मासु स्नेहवान् कुमारो मलयकेतुरभिसन्धातव्य इति अहो दुष्करम्। (थ) अथवा,—

कुले, लज्जायाञ्च स्वयशसि च, माने च, विमुखः,
शरीरं विक्रीय क्षणिकधनलाभाद्धनवति।
तदाज्ञां कुर्वाणो हितमहितमित्येतदधुना,
विचारातिक्रान्तः, किमिति परतन्त्रो विमृशति॥ ४

[ततः प्रविशति प्रतीहार्यनुगतो मलयकेतुः (द)]।

मल। [स्वगतम्।] अहो! राक्षसं प्रति मे विकल्पबाहुल्यात् आकुला (ध) बुद्धिर्न निश्चयम् अधिगच्छति। कुतः।—

---

(१८) एतदासनम्, उपविशतु आर्यः।

(१९) यद् आर्य आज्ञापयति।

---

(त) मुद्रार्थी आदेशपत्रार्थी इत्यर्थः।

(थ) कष्ट दुःखम्। अयं कुमारः मलयकेतुः अस्मासु मयि एवं अकपटं यथा तथा स्नेहवान् प्रेमवान् भवतीति शेषः। अभिसन्धातव्यः वञ्चयितव्यः दुष्करं दुःखकर्त्तव्यम् अशुकरं। अथवा यथास्तु, का गतिः पराधीनस्य इत्याह—

कुले इत्यादि कुले वंशे तदुचितसदाचारे, लज्जायां कुकर्मापरत्वजन्यत्रपायां स्वयशसि निजसुख्यातौ, माने समुचितगौरवे, च विमुखः पराङ्मुखः परतन्त्रः पराधीनो जनः, क्षणिकधनलाभात् विनश्वरवित्तलाभाशया धनवति वैभववति भूमिपतौ शरीरं देहं विक्रीय धनविनिमयेन मनुष्यत्वं विसृज्य इत्यर्थः। तदाज्ञां प्रभोरादेशं कुर्वाणः अनुतिष्ठन्, विचार सदसद्विवेचनम् अतिक्रान्तः अतीतः विचारातिक्रान्तः सदसद्विचारशून्यः सन् अधुना एतत् हितम् एतत् अहितम् इति किमिति कथं विमृशति विचारयति, न कथमपि विचारयितुमर्हतीत्यर्थः अत्र काव्यलिङ्गमलङ्कारः। शिखरिणीवृत्तम्॥ ४

(द) प्रतीहार्या दौवारिकया अनुगतः।

(ध) विकल्पबाहुल्यात् संशयबाहुल्यात् आकुला उद्विग्ना।

भक्त्या नन्दकुलानुरागदृढया नन्दान्वयालम्बिना,
किं चाणक्यनिराकृतेन कृतिना मौर्येण सन्धास्यते ? ।
स्थैर्यं भक्तिगुणस्य वा विगणयन् किं सत्यसन्धो भवेत् ?
इत्यारूढकुलालचक्रमिव मे चेतश्चिरं भ्राम्यति ॥ ५ ॥

[ प्रकाशम् । ] विजये ! क्व भागुरायणः ?

[ प्रतीहारी । ] कुमार ! एसो क्खु कडआदो णिक्कमिदुकामाणं मुद्दासम्पदाणाधिआरे चिट्ठदि । (२०) (न)

मल । विजये ! मुहूर्त्तं निभृतपदसञ्चारा भव, यावदस्य पराङ्मुखस्य एव पाणिभ्यां नयने पिदधामि । (प)

प्रती । जं कुमारो आणवेदि । (२१)

भासुरक । [ प्रविश्य ] अज्ज ! एसो क्खु, खवणओ मुद्दाणिमित्तं अज्जं पेक्खिदुमिच्छदि । (२२)

भागु । प्रवेशय ।

---

( २० ) कुमार ! एष खलु कटकान्निष्क्रमितुकामानां मुद्रासम्प्रदानाधिकारे तिष्ठति ।
( २१ ) यत् कुमार आज्ञापयति ।
( २२ ) आर्य ! एष खलु क्षपणको मुद्रानिमित्तम् आर्यं प्रेक्षितुमिच्छति ।

---

भक्त्येति । राक्षस इति कर्तृपदमूह्यम् । नन्दकुले नन्दवंशे यः अनुरागः आसक्तिः तेन दृढया भक्त्या चाणक्यनिराकृतेन कौटिल्यप्रत्याख्यातेन नन्दान्वयालम्बिना नन्दवंशाश्रयिणा, कृतिना गुणवता मौर्येण चन्द्रगुप्तेन सह सन्धास्यते सन्धिं करिष्यति । वा अथवा भक्तिरेव गुणः उत्कर्षः तस्य स्थैर्यं दार्ढ्यं विगणयन् विचारयन् मम हठां भक्तिं दृष्ट्वा सत्यनिर्णयं सत्या अविसंवादा सन्धा प्रतिज्ञा यस्य सः सत्यसन्धः स्थिरप्रतिज्ञः भवेत्, मौर्यं विजित्य सर्वं नन्दराज्यं तुभ्यमर्पयिष्यामीति पूर्वाङ्गीकारं पालयि स्थिरार्थं । इति इत्थं आरूढं अधिष्ठितं कुलालचक्रं येन तत् आरूढकुलालचक्रमिव कुम्भकारचक्रोपरिस्थितमिव मे मम चेतः मनः चिरं भ्राम्यति सन्दिग्धं तिष्ठतीत्यर्थः । अत्र उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५

( न ) कटकात् शिबिरात् । निष्क्रमितुकामानां निर्गमनाभिलाषिणां । मुद्रायाः सम्प्रदाने समर्पणे एव अधिकारे अङ्गीकृतकर्म्मा सन् मुद्रासम्पदे नकर्षणोन्यर्थं ।

( प ) निभृतः निश्चलः पदसञ्चारः पदक्षेपो यस्याः सा निभृतपदसञ्चारा धीरपदविक्षेपा । पाणिभ्यां हस्ताभ्यां । नयने चक्षुषी पिदधामि आच्छादयामि । अत्रार्थं शंसकहेतुना नयनाच्छादनेन मलयकेतोरतिवाल्लिभ्यत्वं भागुरायणस्य चेष्टं तदङ्गीकरणं मात्योपम्य सूचितम् ॥

भागु। जं अज्जो आणवेदि। (२३)

[इति निष्क्रान्तः]।

क्षपणकः। [प्रविश्य] सावगाणं धम्मलाहो होदु। (२४)

भागु। [सम्यगवलोक्य स्वगतम्] अये राक्षसस्य मित्रं, जीवसिद्धिः॥ [प्रकाशम्] भदन्त! न खलु राक्षसस्य प्रयोजनमेव किञ्चिदुद्दिश्य गम्यते? (क)

क्षप। [कर्णौ पिधाय] सन्तं पावं, सन्तं पावं सावका! तहिं ज्जेव गमिस्सं, जहिं रक्खसस्स पिसाचस्स वा णामं पि ण सुणीअदि। (२५)

भागु। भदन्त! बलीयांस्ते सुहृदि प्रणयकोपः। तत् किमपराद्धं राक्षसेन भदन्तस्य? (ख)

क्षप। सावका! ण मम किं पि रक्खसेण अवरद्धं, सअं ज्जेव मन्दभाओ अत्तणो कम्मसु लज्जामि। (२६) (ग)

भागु। भदन्त! वर्द्धयसि मे कुतूहलम्—"।

मल। [स्वगतम्] मम च। (घ)

भागु। "—श्रोतुम् इच्छामि।

मल। [स्वगतम्] अहमपि।

---

(२३) यद् आर्य आज्ञापयति।

(२४) उपासकानां धर्मलाभो भवतु।

(२५) शान्तं पापं, शान्तं पापम्। उपासकाः! तत्रैव गमिष्यामि, यत्र राक्षसस्य पिशाचस्य वा नामापि न श्रूयते।

(२६) उपासकाः! न मे किमपि राक्षसेनापराद्धं, स्वयमेव मन्दभाग्य आत्मनः कर्मसु लज्जे।

---

(क) न खलु इति काकूक्त्या प्रश्नो व्यज्यते। किञ्चित् किमपि, प्रयोजनं कार्य्यं। उद्दिश्य लक्ष्यीकृत्य।

(ख) बलीयान् बलवत्तरः। सुहृदि मित्रे। प्रणयकोपः प्रेमाभिमानः। अपराद्धं आगस्कृतं।

(ग) आत्मनः कर्मसु—निजदुष्कार्य्येषु।

(घ) मम च कुतूहलं वर्द्धते इति शेषः।

क्षप। सावका ! किं एदिणा असुणिदव्वेण सुदेण ? (२७) (य)

भागु। भदन्त ! यदि रहस्यं, तदा तिष्ठतु। (र)

क्षप। सावका ! ण हि रहस्सं। (२८)

भागु। तर्हि कथ्यताम्।

क्षप। सावका ! णत्थि एदं, तथावि ण कधइस्सं अदिणिसंसं। (२९) (ल)

भागु। भदन्त ! अहमपि मुद्रां न दास्यामि।

क्षप। [स्वगतम्।] युक्तम् इदानीम् अर्थिने कथयितुम्। (व) [प्रकाशम्] का गदी ? एसे णिवेदेमि, सुणादु सावको। अत्थि दाव हगे अधण्णो पढमं पाडलिउत्ते णिवसमाणो लक्खसस्स मित्तत्तणं उवगदे। तर्हि अवसले लक्खसेण गूढं विसकण्णापओअं समुप्पादिअ, घादिदे देवे पव्वदीसले। (३०) (श)

मल। [सबाष्पमात्मगतम्।] कथं, राक्षसेन घातितस्तातो न चाणक्येन ?

भागु। भदन्त ! ततस्ततः ?

---

(२७) उपासक ! किमनेन अश्रोतव्येन श्रुतेन ?

(२८) उपासक ! न हि रहस्यम्।

(२९) उपासक ! नास्तीदं, तथापि न कथयिष्यामि अतिनृशंसम्।

(३०) का गतिः ? एष निवेदयामि, शृणोतु उपासकः। अस्ति तावद् अहमधन्यः प्रथमं पाटलिपुत्रे निवसन् राक्षसस्य मित्रत्वमुपगतः। तस्मिन्नवसरे राक्षसेन गूढं विषकन्याप्रयोगं समुत्पाद्य घातितो देवः पर्वतेश्वरः।

---

(य) अश्रोतव्येन श्रवणायोग्येन। श्रुतेन आकर्णितेन। किं भवेदित्यर्थः।

(र) रहसि भवं रहस्यं गोपनीयं।

(ल) अति नृशंसे अति निष्ठुरे।

(व) अर्थिने याचकाय, मुद्रार्थे प्रदर्शितादराय इत्यर्थः।

(श) अस्ति तावत् श्रोतव्यमिति शेषः। अधन्य पापात्मा। प्रथम आदौ। मित्रत्वं सुहृद्भाव। अवसरे समये। गूढं अप्रकाशं। विषकन्या एव प्रयोगः मारणोपायः तं विषकन्याप्रयोगं समुत्पाद्य विषकन्यारूपं वधोपायमवलम्ब्येत्यर्थः। घातितः व्यापादितः मम त शेषः।

क्षप। तदो हगे लक्खसस्स मित्तं कदुअ, चाणक्कहदएण सधि-कालं अपरादो णिव्वासिदो। दाणीं पि लक्खसेण अणेअअकज्ज-कुसलेण किंपि तादिसं आलद्धोअदि, जेण हगे जीअलोआदो णिक्कासिज्जेमि। (२१) (घ)

भाग। भदन्त। प्रतिश्रुतराज्यार्द्धमप्रयच्छता चाणक्यहतकेन इदमकार्यमनुष्ठितं, (ङ) न राक्षसेन इति श्रुतम् अस्माभिः।

क्षप। [कर्णौ पिधाय।] सन्तं पावं। सावका! चाणक्को विस-कण्णाए णामंपि ण जाणादि। तेण ज्जेव दुट्ठबुद्धिणा लक्खसेण एशा अकज्जसिद्धी किदा। (२२)

भाग। भदन्त! कष्टमिदम्, इयं मुद्रा दीयते, एहि कुमारं सम्भावयाव। (च)

मल। श्रुत, सखे! श्रवणविदारणं वचः
सुहृन्मुखाद्रिपुमधिकृत्य भाषितम्।
पितुर्वधव्यसनमिदं हि येन मे
चिरादपि द्विगुणमिवाद्य वर्द्धते॥ ६

---

(२१) ततोऽहं राक्षसस्य मित्रं कृत्वा, चाणक्यहतकेन सधिकारं नगरान्निर्वासितः। इदानीमपि राक्षसेन अनेकाकार्यकुशलेन किमपि तादृशमारभ्यते, येनाहं जीवलोकात् निष्कासयिष्ये।

(२२) शान्तं पापम्। उपासक! चाणक्यो विषकन्याया नामापि न जानाति। तेनैव दुष्टबुद्धिना राक्षसेन एषा अकार्यसिद्धिः कृता।

---

(घ) सधिकारं सापमानं। निर्वासितः निराकृतः। अनेकानि अकार्याणि कुकर्माणि तेषु कुशलः तेन अनेकाकार्यकुशलेन विविधकुकर्मनिपुणेन। किमपि अनिर्वचनीय-मित्यर्थः तादृशं पर्वतेश्वरमारणसदृशं कुकर्म इति शेषः। मलयकेतुनिधन इति गूढोऽर्थः। आरभ्यते उपक्रम्यते। येन कर्मणा। जीवलोकात् संसारात् निष्कासयिष्ये बहिष्कृतो भविष्यामि। मन्ये सुनिश्चितं इत्यर्थः।

(ङ) प्रतिश्रुतिं प्रामाणीकृत्य राज्यार्द्धं अप्रयच्छता अददता। अकार्यं दुष्कर्म। अनुष्ठितं आचरितं।

(च) एहि आगच्छ। संभावयाव सम्यक् भावयिष्याव इत्यर्थः।

श्रुतमित्यादि। हे सखे रिपुं मम राक्षसं अधिकृत्य विषयीकृत्य तमाश्रित्येत्यर्थः। सुहृन्मुखात् मित्रवदनात् अतिविश्वासभाजनादित्यर्थः। भाषितं कथितं श्रवणविदारणं

भाग। [स्वगतम्।] अये श्रुतं मलयकेतुहतकेन! कृतार्थोऽस्मि। (क)

मल। [प्रत्यक्षवद् आकाशे लक्ष्यं बद्धा।] राक्षस! युक्तमिदम्।—

मित्रं ममायमिति निर्वृतचित्तवृत्तिं
विस्रम्भतस्त्वयि निवेशितसर्वकार्यम्।
तातं निपात्य, सह बन्धुजनाक्षितोयैः
अन्वर्थतोऽपि ननु राक्षस! राक्षसोऽसि॥ ७

भाग। [स्वगतम्।] रक्षणीया राक्षसस्य प्राणाः इति आर्य्यादेशः। भवतु एवं तावत्। [प्रकाशम्] कुमार! अलम् आवेगेन? आसनस्थं कुमारं किञ्चिद् विज्ञापयितुम् इच्छामि। (ख)

मल। [उपविश्य।] सखे! किमसि वक्तुकामः?

भाग। कुमार! इह खलु अर्थशास्त्रव्यवहारिणाम् अर्थवशात् अरिमित्रोदासीनव्यवस्था न लौकिकानाम्-इव स्वेच्छावशात्। यतः तस्मिन् काले सर्वार्थसिद्धिं राजानम् इच्छतो राक्षसस्य चन्द्रगुप्तादपि बलीयस्तया सुगृहीतनामा देवः पर्वतेश्वर एव अर्थपरिपन्थी महान् अरातिः आसीत्। तस्मिंश्च काले, राक्षसेन इदम् अनुष्ठितम् (ग) इति न अतिदोषमिव अत्र पश्यामि। पश्यतु कुमारः,—

शीतपीडाकर मर्म्मभेदकमित्यर्थः. अतः वाक्यं श्रुतं आकर्णितं। येन वचसा मे मम हृदयेन पितुः तस्य वधश्रवणं विनाश इव चिरात् दीर्घकालात् अपि अद्य द्विगुणमिव विरोधमिव द्विगुणितमिव वर्द्धते इति मन्यते, पितृ हेतोरेव मर्म्मसदृशमताकर्षं मे तद्वियोगदुःखं मम चित्तं वर्द्धते इत्यर्थः। अत्र उत्प्रेक्षालङ्कारः। रुचिराछन्दः। "अभौ सजौ गिति रुचिरा चतुर्ग्रहैः" इति लक्षणात्॥ ६

(क) कृतार्थोऽस्मि—कृतकृत्योऽस्मि। सुहृद्भ्यापादिपमधिकृत्य येन मम सुहृत्त्वेन विश्वासवचनत्वं राक्षसस्य रिपुत्वञ्च मलयकेतुना हृदीकृतमिति च कृतार्थता।

मित्र ममायमित्यादि। ननु भो राक्षस! अयं राक्षसः मम मित्रं सुहृत् इति विश्रम्भात् विश्वासात् "समौ विश्रम्भविश्वासौ" इत्यमरः। निवेशितं निहितं सर्वं कार्यं येन तं निवेशितसर्वकार्यं समर्पितकार्य्यजातं अतएव निर्वृतचित्तवृत्तिं निश्चिन्तमनोभावं तातं, बन्धुजनानां अक्षीणि नेत्राणि तोयैः बन्धुजनाक्षितोयैः आत्मीयजनअश्रुभिः सह सार्द्धं निपात्य पातयित्वा हे राक्षस! त्वं अन्वर्थतः याथार्थ्येन राक्षसः असि मर्म्मसकार्थसम्पादनात् स यथा त्वं राक्षस इव हिंस्र इत्यर्थः। अत्र समासोक्तिरलङ्कारः। वसन्ततिलकं वृत्तं॥ ७

(ख) आर्य्यादेशः आचार्य्योपदेशः। आवेगेन आकुलत्वेन। आसनस्थं आसनोपविष्टं। विज्ञापयितुं निवेदयितुं।

(ग) अर्थशास्त्रव्यवहारिणां नीतिशास्त्रविदां अर्थवशात् कार्य्यानुरोधात्, अरि, मित्र,

भागु। भद्र! प्रवेशय।

पुरु। जं अज्जो आणवेदि। (२४) [इति निष्क्रान्तः।]

[ततः प्रविशति पुरुषेण अनुगम्यमानः संयतः सिद्धार्थकः।] (ञ)

सिद्धा। [स्वगतम्।]—

तिप्पन्तीए गुणेसुं दोसेसुं परंमुहं करन्तीए।
अह्मारिसजणीए पणमामो सामिभत्तीए (२५) ॥ ९

पुरु। [उपसृत्य।] अज्ज! अअं सो पुरिसो। (२६)

भागु। [नाट्येन अवलोक्य।] भद्र! किम् अयम् आगन्तुकः, आहोस्विद् इहैव कस्यचित् परिग्रहः? (ज)

सिद्धा। अज्ज! अहं क्खु अमच्चरक्खसस्स सेवओ! (२७)

भागु। भद्र! तत् किमर्थम् अगृहीतमुद्रः कटकात् निष्क्रामसि?

सिद्धा। अज्ज! कज्जगोरवेण तुवराविदोह्मि। (२८) (झ)

भागु। कीदृशं तत् कार्य्यगौरवं, यद् राजशासनम् उल्लङ्घयसि?

मल। सखे भागुरायण! लेखम् उपनय। (ञ)

सिद्धा। [भागुरायणाय लेखम् अर्पयति]।

भागु। [सिद्धार्थकहस्तात् लेखं गृहीत्वा मुद्रां दृष्ट्वा।] कुमार! अयं लेखः, राक्षसनामाङ्किता इयं मुद्रा।

---

(२४) यदार्य्य आज्ञापयति।
(२५) ख्यापयन्त्यै गुणेषु, दोषेषु पराङ्मुखं कुर्वन्त्यै।
अस्मादृशजनस्य प्रणमामः स्वामिभक्त्यै॥
(२६) आर्य्य! अयं स पुरुषः।
(२७) आर्य्य! अहं खलु अमात्यराक्षसस्य सेवकः।
(२८) आर्य्य! कार्य्यगौरवेण त्वरायितोऽस्मि।

---

ख्यापयन्त्यै इत्यादि। गुणेषु प्रकर्षेषु सत्कार्य्येषु इत्यर्थः, ख्यापयन्त्यै परिदृष्टे समानायै, दोषेषु अवगुणेषु कुकार्य्येषु इत्यर्थः, पराङ्मुखं विमुखं कुर्व्वत्यै अस्मादृशानां प्रभुपरायणानां जनानां प्रतिपालिकायै स्वामिभक्त्यै प्रणमामः प्रणामं कुर्म्मः॥ ९

(ज) आगन्तुकः नवागतः। परिग्रहः परिजनः सेवकः। "पत्नीपरिजनादान मूलशापाः परिग्रहाः।" इत्यमरः।

(झ) कार्य्यस्य आदिष्टकर्म्मणः गौरवेण गुरुत्वात् कालक्षेपासहत्वात्। त्वरायितः त्वराम् इव आचरितः सत्वरः इत्यर्थः।

(ञ) लेखं पत्रं। उपनय [illegible]।

मल। मुद्रां परिपालयन् उद्घाट्य दर्शय । (ट)

भागु। [ तथा कृत्वा दर्शयति ]।

मल। [ गृहीत्वा वाचयति ] "स्वस्ति, यथास्थाने कुतोऽपि, कोऽपि, कमपि, पुरुषविशेषम् अवगमयति। अस्मद्विपक्षं निराकृत्य, दर्शिता कापि सत्यवादिता सत्यवता। साम्प्रतम् एषामपि प्रथममुपन्यस्तसन्धीनाम् अस्मत्सुहृदां, पूर्वप्रतिज्ञातसन्धिपरिपणनवस्तुप्रतिपादनप्रोत्साहनेन सत्यसन्ध, प्रीतिम् उत्पादयितुम् अर्हति। एते हि एवमुपगृहीताः सन्त, स्वाश्रयविनाशेनैव उपकारिणम् आराधयिष्यन्ति। अविस्मृतमपि एतत् सत्यवतः स्मारयामः। एतेषां मध्ये केचिद् अरेः कोषदन्तिभ्याम् अर्थिनः, केचिद् विषयेण इति। अस्मान् प्रति अलङ्कारत्रयञ्च, यत् सत्यवताऽनुप्रेषितं, तदुपगतम्। अस्माभिरपि लेखस्य अशून्यार्थं किञ्चिद् अनुप्रेषितं, तदुपगमनीयं, वाचिकञ्च आप्ततमात् सिद्धार्थकात् श्रोतव्यम्" इति। (ठ) सखे भागुरायण। कीदृशो लेखार्थः ?

भागु। भद्र सिद्धार्थक। कस्य अयं लेखः ?

सिद्धा। अज्ज। ण आणामि। (१८)

---

(१८) आर्य ! न जानामि।

---

(ट) मुद्रां चिह्नं परिपालयन् रक्षन्। उद्घाट्य पत्रावरणादुन्मोच्य।

(ठ) स्वस्तीत्यव्ययं मङ्गलबोधकं आरम्भे प्रयुज्यते। कुतोऽपि स्थानात्। कोऽपि पुरुषः कर्त्ता। कमपि पुरुषविशेषं। अवगमयति विज्ञापयति अस्मद्विपक्षं चाणक्यमिति गूढार्थः। निराकृत्य प्रत्याख्याय। प्रथमं प्राक् उपन्यस्तः विहितः सन्धिः यैः ते तेषां उपन्यस्तसन्धीनां। अस्मत्सुहृदां चित्रवर्म्मादीनां। पूर्व्वं प्राक् प्रतिज्ञातं प्रतिश्रुतं सन्धेः परिपणनं प्रतिदानमूल्यं यत् वस्तु तस्य प्रतिपादनेन समर्पणेन यत् प्रोत्साहनं तेन। प्रीतिं परितोषं। उपगृहीताः प्राप्तानुग्रहाः स्वाश्रयस्य मलयकेतोः विनाशेन मित्त्रेण। आराधयिष्यन्ति सेविष्यन्ते। अरेः शत्रोः मलयकेतोरित्यर्थः। कोषः धनराशिः दन्ती हस्ती ताभ्यां, अमेदिनीया। अर्थिनः प्रार्थयितारः। विषयेण राज्येन। अस्मान् प्रति अस्मानुद्दिश्य। अनुप्रेषितं अनुप्रेरितं। उपगतं लब्धं। लेखस्य पत्रस्य अशून्यार्थं (सापादनार्थं) किञ्चित् अलङ्करणं। उपगमनीयं स्वीकर्त्तव्यं। "रिक्तहस्तेन नोपेयात् राजानं देवतां गुरुं।" इति वचनात् यत्किञ्चित् प्रेष्यते तदग्रहणेनाकृपापात्रोऽस्मीति मा। विच्छ मन्तव्यमस्यदिति शेषः। आप्ततमात् अतिविश्वस्तात्।

भागु। हे धूर्त्त! लेखो नीयते, न च ज्ञायते कस्यायम् इति। सर्वं तावत् तिष्ठतु, वाचिकं त्वत्तः केन श्रोतव्यम्। (ड)

सिद्धा। [भय नाटयन्] तुम्हेहि। (४०)

भागु। किमस्माभिः।

सिद्धा। तुम्हेहि गहीदो, ण आणामि का कधेति। (४१)

भागु। [सक्रोधम्] एष ज्ञास्यसि। भद्र भासुरक! बहिर्नीत्वा ताड्यतां तावत्, यावत् सर्वम् अनेन कथितं भवेत्।

भासु। जं अज्जो आणवेदि। (४२)

[इति सिद्धार्थकेन सह निष्क्रान्तः]।

[पुनः प्रविश्य]। अज्ज! इअं तस्स ताडीअमाणस्स कक्खादो मुद्दालञ्छिदा आहरणपेडिआ णिवडिदा। (४३) (ढ)

भागु। [विलोक्य।] कुमार! इयमपि राक्षसमुद्राङ्कितैव।

मल। अयं लेखस्य अशून्यार्थो भविष्यति। इमाम् अपि मुद्रां परिपालयन् उद्घाट्य दर्शय।

भागु। [तथा कृत्वा दर्शयति]।

मल। [विलोक्य] अये! तदिदम् आभरणं, यन्मया स्वशरीराद् अवतार्य राक्षसाय प्रेषितम्। व्यक्तं चन्द्रगुप्तस्य अयं लेखः। (ण)

भागु। कुमार! एष निर्णीयते संशयः। (त) भद्र पुनरपि ताड्यताम्।

---

(४०) युष्माभिः।

(४१) युष्माभिर्गृहीतो न जानामि को कथयति।

(४२) यद् आर्य्य आज्ञापयति।

(४३) आर्य्य! इयं तस्य ताड्यमानस्य कक्षात् मुद्रालाञ्छिता आभरणपेटिका निपतिता।

---

(ड) धूर्त्त वञ्चक। त्वत्तः भवतः। केन जनेन।

(ढ) ताड्यमानस्य प्रह्रियमाणस्य। कक्षात् बाहुमूलात्। मुद्रालाञ्छिता मुद्राङ्किता। आभरणस्य पेटिका मञ्जुषा।

(ण) स्वशरीरात् निजगात्रात्। अवतार्य्य उन्मुच्य।

(त) निर्णीयते निश्चीयते।

पुरु। जं अज्जो आणवेदि। [इति निष्क्रम्य पुनः प्रविश्य च]। अज्ज! एसो क्खु ताडीअमाणो विण्णवेदि कुमारस्स सअं ज्जेव णिवेदेमि त्ति। (४४)

मल। प्रवेशय।

पुरु। जं कुमारो आणवेदि। (४५)

[इति निष्क्रम्य सिद्धार्थकेन सह प्रविशति]।

सिद्धा। [पादयोर्निपत्य।] अभएण मे कुमालो प्पसादं करेदु। (४६) (थ)

मल। भद्र! भद्र! अभयमेव परायत्तजनस्य, तन्निवेद्यतां यथाऽवस्थितम्। (द)

सिद्धा। णिसामेदु कुमालो, अहं क्खु अमच्चरक्खसेण इमं लेहं देइअ, चन्दउत्तसआसं पेसिदोह्मि। (४७) (ध)

मल। भद्र! वाचिकमिदानीं श्रोतुमिच्छामि।

सिद्धा। कुमाल! संदिट्ठोह्मि अमच्चरक्खसेण, जहा—"एदे मम पिअवअस्सा पञ्च राआणो तुए सह पुव्वसमुप्पण्णसन्धाणा। जहा,—कुलूदाहिवो चित्तवम्मा, मलअणअदाहिवो सिंहणादो, कस्मीरदेसणाहो पुक्खरक्खो, सिन्धुराओ सिन्धुसेणो, पारसीआहिवदी मेहक्खो त्ति। एत्थ ज्जेव पढमभणिदा तिण्णि राआणो मलअकेदुणो विसअं अहिलसन्ति इदरे दुवे कोसं हत्थिबलं अ

---

(४४) यदार्य्य आज्ञापयति। आर्य्य! एष खलु ताड्यमानो विज्ञापयति, कुमारस्य स्वयमेव निवेदयामीति।

(४५) यत् कुमार आज्ञापयति।

(४६) अभयेन मे कुमारः प्रसादं करोतु।

(४७) निशामयतु कुमारः, अहं खलु अमात्यराक्षसेन, इमं लेखं दत्त्वा, चन्द्रगुप्तसकाशं प्रेषितोऽस्मि।

---

(थ) अभयेन अभयदानेन, प्रसादं अनुग्रहम्।

(द) भद्रभद्रेति सम्भ्रमे द्विर्भावः। परायत्तजनस्य पराधीनस्य अभयं भयाभाव एव विद्यते इति शेषः। यथावस्थितं अवस्थितं प्रकृतं अनतिक्रम्य यथावस्थितम्।

(ध) निशामयतु शृणोतु। चन्द्रगुप्तसकाशं चन्द्रगुप्तसमीपम्।

